## ॥ भाषार्थ ॥

( अग्निर्होता ) जिस अग्नि का नाम अश्व है और जो सब शिल्पविद्या के गुणों का धारण करनेवाला है। (कविक्रतुः) कविः = जो शिल्पविद्या का प्रकाश करनेवाला और क्रतुः = कि शिल्पविद्या जिससे की जाती है। ( सत्यः ) कारीगरी में जो साधु उत्तम साधन है। ( चित्रश्रवस्तमः ) बिजुली आदि में अत्युत्तम जो वेगादि गुण हैं वे जिसमें सुनते हैं और जिसमें अत्यन्त अद्‌भुत सामर्थ्य ईश्वर ने रक्खा है। ( देवो देवेभिः० ) जो अग्नि वेगादि गुणों का प्रकाश करनेवाला है सो हमारे शिल्पविद्याव्यवहार में अत्यन्त उपकार करनेवाला आपकी कृपा से हो। जिससे शिल्पविद्या में जो दिव्यगुण उनको हम लोग यथावत् सिद्ध करके अत्यन्त सुखी हों॥ ५॥

इति प्रथमेऽध्याये प्रथमो वर्गः॥

## ॥ अथ षष्ठो मन्त्रः ॥

मू०—यद॒ङ्ग दा॒शुषे॒ त्वमग्ने॑ भ॒द्रं क॑रि॒ष्यसि॑। तवेत्तत्स॒त्यम॑ङ्गिरः॥ ६॥

प०—यत्। अ॒ङ्ग। दा॒शुषे॑। त्वम्। अग्ने॑। भ॒द्रम्। क॒रि॒ष्यसि॑। तव॑। इत्। तत्। स॒त्यम्। अ॒ङ्गि॒रः॥ ६॥

## ॥ भाष्यम् ॥

( यदङ्ग ) हे अग्ने प्रापणीयेश्वर ! हे अङ्ग सर्वमित्र ! तुभ्यं सर्वपदार्थदात्रे परमेश्वराय, यो मनुष्य आत्मप्राणाद्युत्तमपदार्था-

न्दत्तवानस्ति, तस्मै (दाशुषे) त्वय्यत्यन्तप्रेमकारिणे मनुष्याय। (भद्रं) भजनीयं परमानन्दस्वरूपं मोक्षाख्यं कल्याणं सुखं च। (त्वमग्ने) त्वमेव। (करिष्यसि) करोषि वेति निश्चयो नः। (तवेत्तत्स०) हे अङ्गिरः प्राणानां रसभूतपरमेश्वरेदं सत्यं व्रतं शीलं तवैवास्ति न कस्यचिदन्यस्येति, त्वया यद्भद्रं क्रियते तदेव सत्यमविनाशिरूपमस्ति नान्यदीदृशमिति विजानीमः॥ यास्काचार्येण भद्रशब्दार्थ एवं वर्णितः—भद्रं भगेन व्याख्यातं भजनीयं भूतानामभिद्रवणीयं भवद्रमयतीति वा भाजनवद्वा इति॥ नि० अ० ४। खं० ६॥ प्राणो वा अङ्गिराः॥ श० कां० ६। अ० १॥ आङ्गिरसो अङ्गाना ऽँ हि रसः। प्राणो वा अङ्गाना ऽँ रसः॥ श० कां० १४ अ० ४॥ यजमानो वै दाश्वान् इति॥ श० कां० ७। अ० ३॥ अयमर्थः। यत्र दुःखं लेशमात्रमपि नास्ति, यन्मुक्त्याख्यं परमसुखं सत्यमस्ति तदत्र विज्ञेयम्। परमेश्वरं यजते स यजमानो विद्यादिदानशीलः स दाश्वान्। अङ्गानां पृथिव्यादीनां सारभूतोऽन्तर्यामी परमेश्वरः सर्वस्य प्राणभूतत्वाद्रसोऽस्तीति बोध्यम्॥ अतः सायणाचार्येण वेदार्थयत्नकृताऽध्यापकविलसनादिभिश्चायं मन्त्रो यथावन्नैव व्याख्यात इति विज्ञायते॥ ६॥

## ॥ भाषार्थ ॥

(अग्ने) हे प्राप्ति होने के योग्य ईश्वर अग्ने! (अङ्ग) हे अङ्ग, सब के परममित्र! (दाशुषे) जो मनुष्य आपको प्राण और आत्मा आदि का समर्पण करता है, जो आप में अत्यन्त प्रेम करनेवाला है, (भद्रं) परमानन्दस्वरूप जो मोक्ष का सुख, सो उस मनुष्य को आप ही देनेवाले हो। (अङ्गिरः) हे प्राणों का प्राण ईश्वर! जो प्राणवत् प्रिय सुख है सो आप की कृपा से ही होता है। क्योंकि (तवेत्तत्सत्यं) वह आप का ही स्वभाव

है, जो सत्य सुखों को ही देना, यह सामर्थ्य अन्य किसी का नहीं। जो आपका दिया सुख है वही एक नित्य है, इससे दूसरा कोई ऐसा सुख नहीं है ॥ इसकी व्याख्या निरुक्त और शतपथ के भाष्य में लिखी है सो देख लेना। इससे यह जानना कि सायणाचार्य, वेदार्थयत्न तथा डाक्टर विलसन साहेब आदि के व्याख्यान में इस मन्त्र का अर्थ ठीक नहीं किया है ॥ ६ ॥

## ॥ अथ सप्तमो मन्त्रः ॥

**मू०—उप॑ त्वाग्ने दि॒वेदि॑वे॒ दोषा॑वस्तर्धि॒या व॒यम् । नमो॒ भर॑न्त॒ एम॑सि ॥ ७ ॥**

उप॑ । त्वा॒ । अ॒ग्ने॒ । दि॒वेदि॑वे । दोषा॑ऽवस्तः । धि॒या । व॒यम् । नम॑ः । भर॑न्तः । आ । इ॒म॒सि॒ ॥ ७ ॥

## ॥ भाष्यम् ॥

( उप त्वाग्ने ) हे अग्ने पूज्यतमेश्वर ! ( दिवेदिवे ) प्रतिदिनं नित्यं। ( धिया ) बुद्ध्या। ( त्वा ) त्वाम्। वयं ( उपैमसि ) तव उप सामीप्यं आ सर्वतः, इमः प्राप्नुमः । तथा ( दोषावस्तः ) अहर्निशं निरन्तरं ( भरन्तः ) ज्ञानेन प्रेमभक्तिं धारयन्तः सन्तो, ( वयं ) त्वां ( नमः ) नमस्कुर्मः । यतो भवान् सद्योस्मान्प्राप्नुयात् । भवत्प्राप्त्या वयं सुखिनो नित्यं भवेम ॥ अत्र मन्त्रव्याख्याने सायणाचार्याध्यापकविलसनादिभिर्भौतिकाग्निमात्रस्यैव गृहीतत्वात्तद्व्याख्यानमन्यथास्ति । कुतो, भौतिकाग्नेरनायासेन होममात्रे प्राप्तत्वान्नमस्करणीयाभावाच्चेति ॥ ७ ॥

## ॥ भाषार्थ ॥

( उप त्वाग्ने ) हे अग्ने ईश्वर ! हमको एक पूज्य आप ही हो। हम लोग ( धिया ) बुद्धि जो ज्ञान है इससे । ( दिवेदिवे ) सब दिन के लिये, आपके समीप को ( त्वामुपैमसि ) शरणागति को प्राप्त होते हैं। ( दोषावस्तः ) तथा दिन और रात्रि में, सत्य भक्तिपूर्वक आप को ( वयम् ) हम लोग, नित्य ही (नमो भरन्तः) नमस्कार करते हैं, जिससे कृपा करके आप हमको शीघ्र प्राप्त हों । आपकी प्राप्ति से हम लोग निरंतर सुखी हों ॥ सायण, डाक्टर विलसन और वेदार्थयत्न के कर्त्ताओं ने इस अर्थ को जाना भी नहीं ॥ ७ ॥

## ॥ अथ द्वितीयोर्थः ॥

( उप त्वाग्ने ) हे पूर्वोक्तविशेषणयुक्तेश्वराग्ने ! भवन्तमुपगता नमस्कुर्वन्तः कथयन्तश्च भवन्तं नित्यं प्रार्थयामः । भवत्प्रार्थनया त्वद्रचितस्य भौतिकाग्नेः सकाशाद्वायुवृष्टिशुद्धिकरं यज्ञानुष्ठानं शिल्पविद्यामयं च प्राप्नुयाम । एतदर्थं निरन्तरं नमोस्तु ते ॥ ७ ॥

## ॥ भाषार्थ ॥

( उप त्वाग्ने ) हे परमेश्वर अग्ने ! हम लोग आपके शरणागत हैं । नित्य आपको नमस्कार और प्रार्थना करते हैं कि जो २ आपने भौतिकाग्नि में गुण रक्खे हैं उन उन गुणों से हम लोग सुगन्धि आदि पदार्थों का होम करके वायु तथा वर्षा के जल की शुद्धि करें तथा शिल्पविद्या को भी प्राप्त हों । इसलिये और मोक्षादि सुख के लिये भी आपको निरन्तर नमस्कार करते हैं ॥ ७ ॥

## ॥ अथाष्टमो मन्त्रः ॥

मू०—राजन्तमध्वराणां गोपामृतस्य दीदिविम्।
वर्धमानं स्वे दमे ॥ ८ ॥

प०—राजन्तम्। अध्वराणाम्। गोपाम्। ऋतस्य।
दीदिविम्। वर्धमानम्। स्वे। दमे ॥ ८ ॥

## ॥ भाष्यम् ॥

एमसीत्यनुवर्त्तते ॥ (अध्वराणां) अग्निष्टोमादियज्ञानां तत्कर्तॄणां धर्मात्मनां मानवानां च (गोपां) रक्षकं तथा (राजन्तम्) सूर्यादीनां लोकानां मध्ये योगिनामात्मनश्च मध्ये धारकान्तर्यामितया राजन्तम् सदा प्रकाशमानं (ऋतस्य दीदिविम्) सत्यविद्यामयस्य वेदचतुष्टयस्य मोक्षस्य च, दीदिविम्=सम्यक् प्रकाशकं। तथा (स्वे) स्वकीये। (दमे) परमोत्कृष्टे पदे। (वर्धमानं) अत्यन्तवृद्धिमन्तं। एवंभूतं परमेश्वरमग्नि त्वां वयं सदैवोपैमसि। भवत्परमपदमोक्षप्राप्तये परमप्रेम्णा सर्वतः सदा भवन्तं जगदीश्वरमेवोपाप्नुमः। यतोऽस्मिन्नेव जन्मनि भवत्कृपयास्माकं निश्चितो मोक्षो भवेदिति नित्यमिच्छामः ॥ ८ ॥

## ॥ भाषार्थ ॥

(अध्वराणां गोपाम्) अध्वर जो अग्निष्टोम आदि यज्ञ और इन यज्ञों के करनेवाले जो धर्मात्मा मनुष्य हैं उनकी जो यथावत् रक्षा करनेवाला है। तथा (राजन्तम्) सूर्य आदि जो लोक उनके बीच में और योगियों के आत्मा के बीच में जो धारण करनेवाला

और अन्तर्यामी रूप से प्रकाशमान है । तथा (ऋतस्य दीदिविम्) सत्यविद्यास्वरूप जो चारों वेद हैं उनका और मोक्ष का जो प्रकाश करनेवाला है । ( वर्धमानं स्वे दमे ) स्वे=अपना जो दमे=परमपद है उसमें वर्धमानं = सब सामर्थ्य से युक्त होके जो सदा विराजमान है, और जो मनुष्य मोक्ष को प्राप्त होते हैं उनको अपने उस परमपद में विज्ञान और आनन्दादि गुणों से जो सदा बढ़ानेवाला है, उस परमात्मा को मोक्ष आदि सुखों की प्राप्ति के लिये ( उपैमसि ) हम लोग प्राप्त होते हैं । अर्थात् हे परमेश्वर! सत्य प्रेम भक्ति से हम लोग आपको सदा प्राप्त रहें कि आप और आपकी आज्ञा से विरुद्ध हम लोग कभी न हों । जिससे हम लोगों को आपकी प्राप्ति से मोक्ष आदि सुख इसी जन्म में प्राप्त हों ॥ ८ ॥

## ॥ अथ नवमो मन्त्रः ॥

मू०—स नः पि॒तेव॑ सू॒नवेऽग्ने॑ सूपाय॒नो भ॑व । सच॑स्वा नः स्व॒स्तये॑ ॥ ९ ॥

प०—सः । न॒ः । पि॒ताऽइ॑व । सू॒नवे॑ । अग्ने॑ । सु॒ऽउ॒पा॒य॒नः । भ॒व॒ । सच॑स्व । न॒ः । स्व॒स्तये॑ ॥ ९ ॥

## ॥ भाष्यम् ॥

( सः ) यः । अग्निमीडे पुरोहितमित्यादिमन्त्रेषु पुरोहितादि-विशेषणैः प्रतिपादितोऽग्निसञ्ज्ञः परमेश्वरः सोऽत्र गृह्यते । ( अग्ने ) हे परमात्मन्! ( नः ) अस्मान् । ( सूपायनः ) स्वकृपया सुखेनैव

प्राप्तस्त्वं भव । तथा हे परमेश्वराभिधाग्ने! ( नः ) ( स्वस्तये ) ऐहिकपारमार्थिकसुखायास्मान् स्वकृपया । ( सचस्व ) समवेतान् कुरु । अर्थात् तत्सुखेन सह वर्त्तमानानस्मान्सदा कुरु । एवं तत्सुखस्य यथावत् सिध्यर्थं सचस्व त्वं नित्यं समवेतः कृपयानुकूलो भव । कस्मै कइव ( पितेव सूनवे ) यथा स्वसन्तानाय स्वप्रजायै अत्यन्तप्रेम्णानुकम्पयमानः सन्तानसुखाय प्रवर्त्तमानः पिता इव । कुतः । भवानेवास्माकं पितास्त्यतः ॥ वर्गद्वयस्थैर्नवभिर्मन्त्रैरग्निहोत्राद्यश्वमेधपर्यन्तेषु वायुवृष्टिजलशुद्धिप्रयोजनेषु यज्ञेषु युक्तिप्रमाणसिद्धानां कर्मणामनुष्ठानं कर्तुं योग्यमस्ति, परन्तु सूत्रब्राह्मणग्रन्थेषु यादृशो विनियोगः प्रतिपादितः सोप्यत्र तदुक्तरीत्या कार्य्यः ॥ ६ ॥

## ॥ भावार्थ ॥

( सः ) अग्निमीळे इत्यादि आठ मन्त्रों में पुरोहित आदि विशेषणों से जिस परमेश्वर का कथन किया है, उसी का 'सः' शब्द से ग्रहण होता है । ( अग्ने ) हे परमेश्वर अग्ने ! अपनी कृपा से ही ( नः ) हमको प्राप्त हो । तथा ( सूपायनः ) इस लोक और परलोक के सुख के लिए । ( नः ) हमको । ( सचस्व ) संयुक्त कर । तथा आप भी हमारे सहायकारी नित्य रहो ! तथा ( स्वस्तये ) सद्विद्यादि शुभगुणों में मोक्ष आदि सुख के लिए हमको सदा युक्त कर । जिससे स्वस्ति=जो परम सुख सो सदा हमको प्राप्त हो । जैसे पिता अत्यन्त प्रेम से अपने सन्तानों को सुख देता है वैसे ही आप हमको पुरुषार्थ से आनन्दयुक्त करके नित्य पालन करो । क्योंकि आपही हम लोगों के पिता हो । इससे हमको सुख देनेवाले एक आप ही हो ॥ ६ ॥

इति प्रथमस्याष्टकस्य प्रथमेऽध्याये द्वितीयो वर्गः ॥

प्रथमं सूक्तं समाप्तम् ॥

## सूक्तम् २

वायवायाहीत्यस्य नवर्चस्य सूक्तस्य मधुच्छन्दा ऋषिः तत्र प्रथम द्वितीयतृतीयमंत्राणां वायुर्देवता चतुर्थपञ्चमषष्ठमन्त्राणां इन्द्र वायू, सप्तमाष्टमनवममंत्राणां मित्रावरुणौ च देवताः । गायत्री छन्दः । षड्जः स्वरः ॥

### ॥ अथ प्रथमो मन्त्रः ॥

मू०—वायवायाहि दर्शतेमे सोमा अरंकृता ।
तेषां पाहि श्रुधी हवम् ॥ १ ॥

पदपाठः—वायो इति । आ । याहि । दर्शत । इमे । सोमाः ।
अरंऽकृताः । तेषाम् । पाहि । श्रुधि । हवम् ॥ १ ॥

### ॥ भाष्यम् ॥

हे वायो अनन्तबल अन्तर्यामिन् दर्शत द्रष्टुं योग्यं प्रेक्षणीयं ईश्वर कृपया हृद्देशं आयाहि आगच्छ इमे सोमाः सर्वे पदार्थाः भवतैव अरंकृताः अलंकृताः उत्पादिताः सन्ति तेषां पाहि तान् त्वमेव रक्ष । तथा हवम् स्तोत्रं भागम् त्वं श्रुधी श्रुधि शृणु अस्मत् कृतां स्तुतिं सद्यः शृणु । वायुः परमेश्वरस्य नामास्ति । प्रथममंत्रभाष्योक्तानि प्रमाणान्यत्र वेद्यानि ॥ अन्यच्च नमो ब्रह्मणे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासीत्यादीन्यपि च । तैत्तिरीयोपनिषदि एवं व्यास सूत्रमप्यत्र प्रमाणम् । अतएव प्राणः । अ० १ । पा० १ । सू० २३ । अत्रापि प्राण वायु शब्देन परमात्मोच्यते ॥ इत्येकोर्थः ॥

## ॥ अथ द्वितीयोर्थः ॥

हे वायो! दर्शत द्रष्टव्यपदार्थ विद्यार्थं प्रेक्षणीय सोमाः सोमवल्याद्या ओषधयः तद्रसाश्च अलंकृताः अत्युत्तमाः त्वतो भवन्तीति जानीमः। तेषां तान् यज्ञे सुगन्ध्यादि होमेन शुद्धः सन् पाहि रक्ष। तथा हवम् देयं ग्राह्ययोग्यं विद्यान्वितं शब्दं श्रुधि श्रावय। विद्योपदेशार्थं यदाख्यानं भवति तत्राचेतने चेतनवद् व्यवहारे न दोषो भवति। भौतिको वायु द्वितीयेर्थे गृह्यते। याग्नि विद्या प्रथमे द्वितीये च वर्गे उक्ता तस्या अपि वायुः कारणम् ॥ वायु सहायेन विनाग्निरप्य किंचित्करो भवति। स्थावर जंगमस्य द्विविधस्य जगतो वायुर्वृद्धि रक्षाकरोऽस्ति। अत एव रक्षकः तथा श्रवण कथनादि चेष्टामयस्य व्यवहारस्य वायुरेव मुख्यं कारणमस्ति तस्माद् वायु गुणोपदेशा ईश्वरेण कृतः॥ १ ॥

## ॥ अथ प्राकृतभाषा ॥

हे अनन्त बल वायो! आप जो ईश्वर सब विद्वानों को देखने के योग्य हमारे हृदय में सदा प्रकाशरूप स्थिर हो। जितने संसार में पदार्थ हैं उन की उत्पत्ति आप ने ही की है! ए सब आप से ही शोभायमान हो रहे हैं। उन की रक्षा आप करो जिस से सब पदार्थ बने रहें)॥ हवम्॥ हमारी स्तुति को कृपा से सुनो। वायु-परमेश्वर का नाम तैत्तिरीयोपनिषद् में लिखा है सो देख लेना॥ इति प्रथमार्थ भाषा॥

## ॥ अथ द्वितीयार्थ भाषा ॥

हे वायो! तूँ शब्द को सुनाने वाला है विद्योपदेश के लिये जड़ में चेतन की नाईं द्रष्टान्त देने में दोष नहीं होता। इस दूसरे

अर्थ में जो यह चलने वाला प्रत्यक्ष वायु वह लिया जाता है ॥ प्रथम द्वितीय वर्ग में पदार्थ सम्बन्धी विद्या जो कही है उस का निमित्त वायु भी है । उस के सहाय से बिना अग्नि से कुछ भी नहीं हो सकता । तथा कहना सुनना चेष्टा करनी उस का मुख्य हेतु वायु ही है ॥ इस लिये वायु विद्या का उपदेश परमेश्वर ने किया है ॥ १ ॥

## ॥ अथ द्वितीयो मंत्रः ॥

वाय उक्थेभिर्जरन्ते त्वामच्छा जरितारः ।
सुतसोमा अहर्विदः ॥ २ ॥

प०—वायो इति । उक्थेभिः । जरन्ते । त्वाम् । अच्छ ।
जरितारः । सुत ऽ सोमाः । अहः ऽ विदः ॥ २ ॥

## ॥ भाष्यम् ॥

हे वायो ! सुतः संपादितः सोमगुण समुदायो यैस्ते सुतसोमाः ॥ अहर्विदः ॥ प्रकाशविदः कालविदो वा स्तावका जरितारः ॥ उक्थेभिर्वेदस्थैरुत्तम स्तोत्रैः । ( त्वामच्छ ) जरन्ते) उत्तमरीत्या नित्यं त्वामेव स्तुवन्ति सर्वेषामीश्वर एव स्तोतव्योस्ति नान्यः तस्य सर्वोत्कृष्टत्वात् ॥ इत्याद्योर्थः ॥

## ॥ अथ द्वितीयोर्थः ॥

हे वायो ईश्वर वेगाद्यनेकैरुत्तमैर्गुणैर्युक्तो वायुर्भवता निर्मितः येनेहानेकविधं सुखं भवत्यतः त्वामेव प्रकृष्टरीत्या पूर्वोक्ता जनाः स्तुवन्ते वायोर्गुणांश्चेति ॥ २ ॥

## ॥ अथ प्राकृतभाषा ॥

हे वायो ! जिन ने सोमादि ओषधियों की विद्या किं वा शान्त्यादि गुण समुदाय वायु को प्राप्त किया है विद्या के प्रकाश युक्त समय के जानने वाले हैं ॥ वे उत्तम २ वेदोक्त सूत्रों [क्तों] से भली भांति आपकी ही स्तुति करते हैं ॥ क्योंकि उन को आप से उत्तम स्तुति करने के योग्य कोई भी नहीं है ॥ २ ॥

## ॥ अथ द्वितीयार्थ भाषा ॥

हे परमेश्वर आपने वेगादि अनेक उत्तम गुणों से सह वर्त्तमान वायु को उत्पन्न किया। जिस से इस संसार में अनेक प्रकार का सुख होता है ॥ इस से हम लोग सब आप की ही स्तुति करने वाले हैं तथा शिल्पविद्यासिद्धि के लिये वायु के गुणों की आपकी कृपा से स्तुति करते हैं ॥ २ ॥

## ॥ अथ तृतीयो मंत्रः ॥

वायो तव प्र पृञ्चतीति धेना जिगाति दाशुषे
उरूची सोमपीतये ॥ ३ ॥

प०—वायो इति । तव । प्रपृञ्चती । धेना । जिगाति ॥
दाशुषे । उरूची । सोमपीतये ॥

## ॥ भाष्यम् ॥

हे वायो ! अनन्तबलेश्वर तव धेना वाक् वाणी वेदाख्या

दाशुषे सर्वोत्तम दानकर्त्रे यजमानाय जीवाय प्रपृञ्चती सर्वान् मनुष्यात् स्पर्शमाना उरूची । बहून् विदुषः अञ्चन्ती प्राप्तास्ति यया वेदा रचिताःसन्ति सा सोमपीतये ॥ सोमज्ञानस्योत्पत्त्याल्हादेन पीतये तृप्तये जिगाति स्तौत्युपदेशं करोति न इत्यवबुध्यामहे । अत्र प्रमाणम् ॥ सोमः पवित्रमुच्यते ॥ वायुः पवित्रमुच्यते ॥ निरुक्त । अ० ६ । पूर्वार्द्धे ।

सोमो वै राजामुष्मिल्लोक आसीत्तं देवाश्च ऋषयश्चाभ्यध्यायन् ॥ ऐतरेय० पंचिका ३ अ० ३ एवामयमर्थः वायुसोमौ शुद्धौ पवित्रकरौ पवित्रस्वरूपौ विज्ञेयौ द्वे ईश्वरस्यात्र नाम्नी स्तः ॥ अमुष्मिन्परलोके मोक्षाख्ये सोमः । ईश्वर एव सर्वेषां राजास्ति तस्यैव ध्यानं देवा विद्वांसः ऋषयो वेदार्थ द्रष्टारः कृतवन्तः । वयमपि ध्यानं कुर्वीमहीत्यर्थः । इत्याद्योर्थः ॥

## ॥ अथ द्वितीयोर्थः ॥

अत्र भौतिकोवायुर्गृह्यते हे ईश्वरोत्पादितवायो उरूची बहुधारणवेगयुक्ताः प्रपृञ्चती प्रकृष्टतया संपर्ककर्त्री दाशुषे शिल्पविद्यादानचिकीर्षवे धेना शिल्पविद्याधर्त्री या तव शक्तिरस्ति । सा सोमपीतये सोमाद्योषधरसेन तृप्तये शिल्पविद्यायाः तृप्तये वा जिगातिस्तौति तव गुणान् प्रकाशयतीति गम्यते । ३ ॥

## ॥ अथ प्राकृतभाषा ॥

हे प्राणप्रिय परमात्मन् वायो आपकी जो वेदवाणी सो दाशुषे सब से उत्तम विद्यादि दान को करने वाले जीव को प्राप्त होती है । अन्य को नहीं जो सर्वज्ञ आपकी वेदवाणी सब मनुष्यों

को उपदेश द्वारा स्पर्श संगकर्त्ता है जो उन में से बहुत विद्वानों को प्राप्त होती है ॥ जिस से आप ने वेद रचे हैं सो । सोमपीतये। सोम पवित्र और आनन्दकारक जो आप सोमवल्यादि रोग शान्तिकारक ओषधि इन के ज्ञान की उत्पत्ति से अह्लाद प्रसन्नता में तृप्ति के लिये हमको उपदेश नित्यकर्ता है इस को हम लोग निश्चित जानते हैं सोम और वायु ईश्वर का तथा ओषधियों का भी नाम है इस अर्थ में निरुक्त और ऐतरेय का प्रमाण संस्कृत में लिखा है सो देख लेना ॥ इति प्रथमार्थ भाषा ॥

## ॥ अथ द्वितीयोऽर्थः ॥

इस अर्थ में प्रसिद्ध जो यह वायु उस का ग्रहण है हे ईश्वरोत्पादित वायो अत्यन्त धारण और वेग करने वाली स्पर्श करने वाली और शिल्प विद्या को बढ़ाने वाली जो तेरी शक्ति सो। सोमपीतये । सोमवल्ल्यादि ओषध रस से तृप्ति के तथा शिल्पादि विद्या से तृप्ति के लिये ॥ दाशुषे ॥ शिल्पविद्या दान की इच्छा करने वाले के लिये ॥ जिगाति ॥ तेरे गुणों का प्रकाश करती है ॥ ऐसा तुझको हम लोग जानते हैं ॥ ३ ॥

## ॥ अथ चतुर्थो मन्त्रः ॥

इन्द्रवायू इमे सुता उप प्रयोभिरागतम् ।
इन्दवो वामुशन्ति हि ॥ ४ ॥

प०—इन्द्रवायू इति । इमे । सुताः । उप । प्रयःभिः ।
आ गतम् । इन्दवः । वाम् । उशन्ति । हि ॥ ४ ॥

## ॥ भाष्यम् ॥

हे ( इन्द्रवायू ) सूर्य्यपवनौ ( इन्दवः ) ये सर्वे रसा जगति वर्तन्ते त इमे सर्वे ( वाम् ) द्वावेव ( उशन्ति हि ) प्रसिद्धया कामयन्ते भवत्सेविता इमे सर्वे सर्वत्रोपकारका भवन्ति । तेषां फलं वृष्टिस्तस्याः फलमोषधयस्तासां फलमन्नानि तैः प्रयोभिरन्नै सह सुखानन्दाढ्यं फलमस्ति हे ईश्वर तद्भवत् कृपयैवास्मानुपागतमुप निकटे आ समन्तात्प्राप्तं भवति । प्रीञ् तर्पणे कान्तौ चेत्यस्माद्धातोरौणादिकेऽसुन्प्रत्ययेकृते प्रयस् इति शब्दो व्युत्पद्यते । भोक्तॄणां तृप्तिहेतुत्वात्काम्यत्वाच्च प्रयांस्यन्नान्युच्यन्ते । इन्द्रवायू सूर्यपवनौ यादृशगुणावीश्वरेण रचितौ तावदेव कर्तुं समर्थौ स्तः । अतः परम्परया परमात्मन एव माहात्म्यं वेदितव्यम् । कुतः । यस्मिन् यादृश गुणवत्त्वं तेन निर्मितं तस्मिन् तादृशस्यैव दर्शनात् ॥ ४ ॥

## ॥ अथ प्राकृत भाषा ॥

हे ( इन्द्रवायू ) ईश्वर रचितौ सूर्यपवनौ ( इन्दवः ) जितने रस जगत् में वर्त्तमान हैं वे सब ईश्वरकृत नियम से तुम को ही सेवनकर्त्ते हैं यह प्रसिद्ध बात है कि सूर्य और पवन के द्वारा सब रसों का आकाश में गमन होता है उनके ही आधार से ठहरते भी हैं तथा सबके उपकार[क] भी उन्हीं के द्वारा होते हैं उन रसों का फल मेघ है मेघ का फल ओषधियों की वृद्धि और पुष्टि है उन से अन्न उत्पन्न होते हैं अन्नों से प्रजा को सब प्रकार का सुख होता है । हे परमेश्वर यह आपका ही धन्यवाद है कि हम को यह सुखरूप फल प्राप्त होता है जो हम लोगों के सुख के लिये आपने सूर्य्य और वायु आदि उत्तम

पदार्थ रच के कृपा से धारण किये हैं क्योंकि जिस पदार्थ में जैसा गुण आप ने रक्खा है उस में वैसा ही हमारे देखने में और उपकार में आता है यह आपकी ही दया है ॥ ४ ॥

॥ अथ पञ्चमो मन्त्रः ॥

वायविन्द्रश्च चेतथः सुतानां वाजिनीवसू ।
तावायातमुपद्रवत् ॥ ५ ॥ ३ ॥

प०—वायो इति । इन्द्रः । च । चेतथः । सुतानाम् । वाजिनीवसू इति वाजिनीवसू । तौ । आ । यातम् । उप । द्रवत् ॥ ५ ॥ ३ ॥

॥ भाष्यम् ॥

हे (वायो) सर्वबलान्वितेश्वर भवच्छक्तया (इन्द्रः) सूर्य्यः सूर्य्यवायू (सुतानाम्) उत्पन्नानां सर्वानुत्पन्नानोषध्यादि रसान् (चेतथः) संज्ञान्वितान् कुरुतः (तौ वाजिनीवसू) वाजिनी उषसो नाम निघण्टौ तां वासयन्तौ वाजिनीवसू । तौ सर्वं जगत् (उपद्रवत्) उपद्रवन्तौ समीपमागच्छन्तौ स्तः (आयातम्) हे इन्द्र वायू युवां प्राप्तौ सर्वत्रस्थानामिति । अत्र सूर्य्य वायु संयोगजन्यविद्याऽनेनद्योत्यत इति ज्ञेयम् ॥ ५ ॥ ३ ॥

॥ अथ प्राकृतभाषा ॥

हे (वायो) सब बलों से युक्त ईश्वर आपकी सामर्थ्य से (इन्द्रः) सूर्य्यः सूर्य्य और वायु (सुतानाम्) उत्पन्न जो

ओषधि आदि के रसों को (चेतथः) सचेत कर रहे हैं। तथा प्रातः काल से ले के सूर्योदय पर्यन्त जो समय उस को उषा कहते हैं उस को बसाने का कारण ये दोनों हैं अर्थात् दिवस रात्रि के होने के भी ए ही दोनों कारण हैं (उपद्रवत्) सब के समीपवासी हो रहे हैं। सो हे इन्द्रवायू (आयातम्) तुम दोनों जगत् में विस्तृत हो रहे हो। इस मंत्र में सूर्य्य जो उष्णता और वायु इन दोनों के संयोग से बिजुली आदि विद्या प्रकाशित होती है इस से इन दोनों से भी यथायोग्य विद्या का उपकार लेना ॥ ५। ३॥

## ॥ अथ षष्ठो मन्त्रः ॥

वायविन्द्रश्च सुन्वत आयातमुपनिष्कृतम्।
मक्ष्वित्था धिया नरा ॥ ६ ॥

प०—वायो इति। इन्द्रः। च। सुन्वतः। आ। यातम्। उप। निःऽकृतम्। मक्षु। इत्था। धिया। नरा ॥ ६ ॥

## ॥ भाष्यम् ॥

हे (वायो त्वं (इन्द्रः) सूर्यश्च जीवः परमेश्वरो वा एतैः सह (निष्कृतम्) प्रायश्चित्तं वा संस्कृतं चित्तं वा हविश्च (उपायातम्) समीपमागच्छतम् (सुन्वतः) तदभिषव संस्कर्त्तारौ शुद्धिकरौ प्रकाशकौ स्त इति जानीमो वयम् (इत्था) इत्थमनेनप्रकारेण (मक्षु) शीघ्रम् (धिया) कर्म्मणा क्रियया (नरा) नरौ नयकर्त्तारौ शरीरे ब्रह्माण्डे च युवां वर्तेथे इत्यस्मन्निश्चयः। सूर्य्यजीवेश्वरा इन्द्राभिधाः। तत्र सूर्येश्वरयो-

रिन्द्रेतिनामास्ति वेदनिरुक्तयोः । जीवस्य पाणिन्याचार्येणोक्तायामष्टाऽध्याय्याम् ॥ इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा । अष्टा० सू० ६३ अ० ५ पा० २ । तत्र इंद्रेण जीवेन जुष्टं सेवितं तथा जीवस्येन्द्रस्य लिंगं चिह्नमस्ति तस्माच्छ्रोत्रादिकमिन्द्रियमुच्यते एवमीश्वरेणेन्द्रेण सृष्टं दृष्टं जीवाय च दत्तमिन्द्रियं चेति अतः किमागतं त्रिधाविद्याऽत्र विज्ञायते शिल्पविद्येश्वर विद्याजीवविद्याचेति ॥ ६ ॥

## ॥ अथ प्राकृत भाषा ॥

हे वायो तू शरीर और ब्रह्मांड में बसता है तथा सूर्य जीव और परमेश्वर इन तीनों के साथ तेरा निवास है तेरे गुण ज्ञान से शिल्प विद्या सिद्ध होती है ( निष्कृतम् ) तथा तू जो प्राण उस के अभ्यास से चित्त स्थिर और शुद्ध संस्कार युक्त होने से पापों का त्याग और धर्मानुष्ठान करने से उस जीव का प्रायश्चित पाप भोग से छूट जाता है तथा हविः जिस का होम किया जाता है वह वायु वृष्टि में उपकारक तेरे संग से होता है वह तू सूर्यादिकों के साथ हमारे समीप सुख देने वाला ही है ( सुन्वतः ) तथा सूर्य और तू मिल के ( हविः ) होम किये पदार्थ के परमाणु से संस्कार शुद्धि करने और प्रकाश करने वाले हो ऐसा तुमको हम जानते हैं ( इत्था ) इसी प्रकार से शरीर और ब्रह्मांड में क्रिया से सब विद्या की प्राप्तिसाधन हो ( मक्षु ) तथा शीघ्र व्यवहार और परमार्थ की सत्यनीति के साधने वाले हो एवं तेरे प्राणायाम योगाभ्यास की रीति से जीव और ईश्वर के ज्ञान का साधन तू ही है सूर्य और ईश्वर इनका नाम इन्द्र है यह बात वेद और निरुक्त में लिखी है और जीव का इन्द्र नाम

पाणिनिकृत अष्टाध्यायी में लिखा है वहां देख लेना इस से क्या आया कि शिल्प विद्या ईश्वर विद्या और जीव विद्या ये तीनों विद्या वायु द्वारा सिद्ध होती हैं इति ॥ ६ ॥

## ॥ अथ सप्तमो मन्त्रः ॥

मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् ।
धियं घृताचीं साधन्ता ॥ ७ ॥

प०—मित्रम् । हुवे । पूतऽदक्षम् । वरुणम् । च । रिशादसम् । धियम् । घृताचीम् । साधन्ता ॥ ७ ॥

## ॥ भाष्यम् ॥

हे जगदीश भवान् सर्वस्य ( मित्रम् ) मित्रोऽस्ति तं त्वां ( पूतदक्षं ) पवित्र ज्ञानम् ( वरुणम् ) वरं सर्वोत्कृष्टं वरप्रदातारं च ( रिशादसम् ) रिशानां हिंसकानां द्वेषबुद्धीनां मदसो विनाशकः तमहं ( हुवे ) तस्यैव ग्रहणं कुर्वे कस्मै प्रयोजनाय ( घृताचीं ) स्नेहवतीं घृतगुणानञ्चतीं प्राप्नुवतीं ( धियम् ) धारणावतीं बुद्धिं उपासितः सन्नीश्वरः साध्नोतुन इति ॥ ७ ॥

## ॥ अथ द्वितीयोर्थः ॥

अहं ( मित्रम् ) प्राणं ( पूतदक्षं ) पवित्रचतुरगतिं तथा ( वरुणम् ) उदानं च ( रिशादसम् ) रिशानां रोगाणामत्तारौ नाशकौ हे ईश्वर भवत्कृपया सदैव भवेतामित्येतदर्थं त्वां हुवे तथा च तौ पूर्वोक्त विशेषणयुक्तौ प्राणोदानौ मित्रावरुणौ

( घृताचीं ) सत्यधर्मवतीं ( धियम् ) बुद्धिं साधंतौ भवेतामिति च ॥ शतपथे १ कांडे अध्याय ६ ( प्राणोदानौ वै मित्रा-वरुणौ ) ॥ ७ ॥

## ॥ अथ प्राकृत भाषा ॥

हे परमात्मा आप सब के ( मित्रम् ) मित्र हो तथा ( पूत-दक्षम् ) पवित्र ज्ञान वाले ( वरुणम् ) सब से उत्तम ।। ( रिशा-दसम् ) जो सब से वैर रखते हैं उन का नाश करने वाले ऐसे जो आप उसी को ( हुवे ) मैं ग्रहण कर्त्ता हूँ दूसरे को नहीं किस प्रयोजन के लिये ( घृताचीम् ) कि आप हमारी स्नेहादि गुणवाली ( धियम् ) बुद्धि को अत्यंत बढ़ावो ।

## ॥ अथ द्वितीयार्थ भाषा ॥

( मित्रम् ) मित्र जो प्राण ( पूतदक्षम् ) शुद्धगमन करने वाला तथा ( वरुणं ) वरुण जो उदान ए दोनों रोग नाश करने वाले हैं । आपकी कृपा से सदैव सुखकारक हों । हे ईश्वर इस लिए आपका शरण मैंने लिया है जिस से प्राण और उदान जो मित्र और वरुण कहाते हैं वे सत्यधर्म वाली बुद्धि के सहायक सदैव हों ॥ ७ ॥

## ॥ अथाष्टमो मन्त्रः ॥

ऋतेन मित्रावरुणावृतावृधावृतस्पृशा ।
क्रतुं बृहन्तमाशाथे ॥ ८ ॥

प०—ऋतेनं। मित्रावरुणौ। ऋतऽवृधौ। ऋतऽस्पृशा। क्रतुम्। बृहन्तम्। आशाथे इति॥ ८॥

## ॥ भाष्यम्॥

हे (मित्रावरुणौ) प्राणोदानौ सूर्य्याचन्द्रमसौद्यावापृथिव्यौ वा (ऋतावृधौ) ऋतेन सत्य स्वरूपेण ब्रह्मणा वर्धमानौ (ऋत स्पृशा) ऋतं ब्रह्म स्पर्शतस्तौ ब्रह्म व्याप्तेर्निकटौ (क्रतुम्) सर्व जगत्कर्त्तारं च (बृहन्तम्) आकाशादिभ्योपि महान्तं परमेश्वरं (आशाथे) प्राप्नुथः। कुतः। ऋतेन ब्रह्मणा सह वर्तमानौ स्थः तद्व्याप्तिमन्तौस्थश्चातः॥

## ॥ अथ द्वितीयोर्थः॥

हे पूर्वोक्तौ (मित्रावरुणौ) ऋतेन विद्यायाः सत्यहेतुना सह वर्त्तमानौ (ऋतावृधौ) ऋतैः शिल्पविद्याप्रकाशकैर्गुणै-र्वर्धमानौ तद्वर्धकौ च (ऋतस्पृशा) ऋतस्पृशौ सत्यविद्या स्पर्श-कारकौयुवांस्थः। अतएव (क्रतुम्) यज्ञमग्निहोत्राद्यश्वमेधा-न्तं शिल्पविद्यामयं वा (बृहन्तम्) महान्तम् विमानादि विद्याभिः प्रवृद्धम् (आशाथे) व्याप्तवंतौस्थः यज्ञ निमित्तौ वा वृष्टिहेतू इत्यर्थः॥ ८॥

## ॥ अथ प्राकृतभाषा॥

हे (मित्रावरुणौ) मित्र प्राण और वरुण उदान इत्यादि० तुम दोनों (ऋतेन) ऋत जो यथार्थस्वरूप परब्रह्म उसका जो सामर्थ्य (ऋतावृधौ) उसी से बढे हो। (ऋतस्पृशा) ऋत

जो परमेश्वर का सामर्थ्य उसके स्पर्श करने वाले निकट वर्तमान हो (क्रतुम्) सब जगत् का करने वाला (बृहन्तम्) आकाशादि बड़ों से भी जो बड़ा है उस परमेश्वर को तुम दोनों (आशाथे) प्राप्त हो रहे हो अर्थात् परमेश्वर से सह वर्त्तमान हो।

## ॥ अथ द्वितीयार्थ भाषा ॥

पूर्वोक्त (मित्रावरुणौ शरीरस्थ और ब्रह्मांडस्थ दो प्रकार का जो वायु सो (ऋतेन) विद्या के सत्य हेतु से तुम दोनों युक्त हो (ऋतावृधौ) ऋत शिल्पविद्या के प्रकाशक जो सत्यगुण उनसे बढ़ रहे हो। शिल्पविद्या और उसके गुण उनके बढ़ाने वाले भी हो। (ऋतस्पृशा) सत्यविद्या के कराने वाले तुम्ही हो अतएव (क्रतुम्) अग्निहोत्र से ले के अश्वमेध पर्यन्त जो यज्ञ अथवा कारीगरीरूप यज्ञ (बृहन्तम्) सब से अधिक फल देने वाला उसको (आशाथे) प्राप्त हो रहे हो अर्थात् उसके निमित्त तुम्ही हो॥ ८॥

## ॥ अथ नवमो मन्त्रः ॥

कवी नो मित्रावरुणा तुविजाता उरुक्षया।
दक्षं दधाते अपसम् ॥ ९ ॥

प०—कवी इति। नः। मित्रावरुणा। तुविजातौ। उरुक्षया।
दक्षम्। दधाते इति। अपसम् ॥ ९ ॥

## ॥ भाष्यम् ॥

हे परमेश्वर भवद्रचितौ (मित्रावरुणौ) पूर्वोक्तविशेषणयुक्तौ प्राणोदानौ (तुविजातौ) बहुष्वाकाशादिषु पदार्थविद्याव्यवहारेषु च जातौ प्रादुर्भूतौ प्रसिद्धौ स्तः (उरुक्षया) उरुक्षयौ बहुषु पदार्थेषु निवासिनौ (कवी) विक्रांतदर्शिनौ विक्रमणशीलौ वा (नः) अस्माकं (दक्षम्) चातुर्य्यविज्ञानबलम् (अपसम्) व्यवहारपरमार्थसिद्धिकरमुत्तमं कर्म (दधाते) भवत् कृपया धारणं कुरुत इति निश्चयो नः बहुनामसु उरु तुवि शब्दौ यास्ककृते निघंटौ पठितौ स्तः ॥ वायुर्हि प्राणः । पं० अ० ४ वायुर्वा अग्निः ॥ सुषमिद्वायुर्हि स्वयमात्मानं समिन्धे इत्यादि० ॥ वायुर्वैतूर्णिर्हव्यवाड् वायुर्हीदं सर्वं सद्यस्तरतीत्यादि० वायुर्वै जातवेदा वायुर्हीदं सर्वं करोति यदिदं किं च । ऐतरे० पंचिका २ अ० ५ । वायु प्राणः प्राणोरेतोरेतः पुरुषस्य प्रथमं संभवतः संभवतीति ऐतरेय अ० १ पंचिका ३ । वायुर्हचैव प्रजापतिः पवमानः प्रजापतिरिति । ऐतरे० अ० ४ पंचिका ५ । वायुर्वा मध्यमा विश्वज्योतिः वायुर्ह्येवांतरिक्षलोके विश्वज्योतिः । श० कां० ८ अ० ३ वायुर्वाधर्त्रम् । वायुनैव तदेतानि सर्वाणि भूतान्युभयतः परिगृह्णाति । शतप० कां० ८ अ० ४ वायुर्वै गौतम तत्सूत्रम् वायुना वै गौतम सूत्रेणायं च लोकः परश्चलोकः सर्वाणि भूतानि संदब्धानि भवन्ति । श० कां० १४ अ० ६ ।

### अथैषामर्थः—

प्राणः शरीरपोषकोवायुः शरीरधारकश्च तथा प्राणस्यप्राणः परमेश्वरः प्राणधारकश्च स्वात्मप्रकाशकत्वाद् वायुरग्नि संज्ञकः । वायुर्वै तूर्णिः । शीघ्रंगन्ता गमयिता वा भौतिको वेगवान् वायुर्वै

जातवेदाः जातान्यग्न्यादीनि विन्दते परमेश्वरो वा वायुरेव परमेश्वरः वायुना भौतिकेन वा सर्वेषां जीवानां मरणानन्तरं यातनां करोति वायुं प्राणयुक्तं जीवं यातयति ॥ वायु प्राणोरेतः गर्भाशयं प्राप्य पुरुषस्य जीवस्य देहस्य प्रथमं संभवनं संभवतीति ॥ वायुश्चैव प्रजापतिः ॥ परमात्मा सर्वस्य पालकत्वात् पवमानः पवित्रत्वात् पवित्रकारकत्वाच्च। तथा भौतिको वायुरपि पवित्रता पालनयोर्हेतुत्वात्प्रजापतिर्मन्तव्यः मध्येभवा मध्यमा विश्वस्य ज्योतिः प्रकाशका वायुरेवास्तीति मन्तव्यम् मध्येनामान्तरिक्षलोके विश्वं प्रकाशयतीति वायुर्वाधिर्त्र सर्वेषां लोकानां प्रतिष्ठावायुनैव सर्वाणि भूतान्युभयतः बाह्यान्तर्हेतुभ्यां परिगृह्णाति परमेश्वरः जीवो वा परंतु ईश्वरे वायुं जीवं च स्व सत्तया परिगृह्णातीत्यर्थः हे गौत्तम गोत्रापत्य अस्य पृथिव्यादेर्लोकस्य परस्य सूर्यादेर्लोकस्य च सर्वेषां भूतानां च वायुरेव सूत्रम् यथा सूत्रेण मणिगणाबद्धा भवन्ति तथैव वायुना सूत्रेणैव सर्वाणि पृथिवी सूर्यादीनि वस्तूनि संदब्धानि भवंति संतीत्येवमादि शतपथ ब्राह्मणादि ग्रन्थेषु बहुविधव्याख्यानमस्त्यधिकं तत्रैव द्रष्टव्यमिति ॥

## ॥ अथ प्राकृतभाषा ॥

हे भगवन् (मित्रावरुणा) आपके रचित पहले कहे विशेषणों से सह वर्त्तमान जे [जो] प्राण और उदान आदि दो २ हैं वे (तुविजातौ) आकाशादि पदार्थों में प्रसिद्ध वर्त्तमान है और पदार्थविद्या व्यवहारों में जे [जो] प्रसिद्ध हेतुभूत है (उरुक्षया) बहुत पदार्थों में निवास करने वाले ( कवी ) जे महापराक्रमयुक्त है वे दोनों ( नः ) हमारे ( दक्षम् ) चतुराई विज्ञान और बल के धारण करने वाले हैं तथा ( अपसम् ) व्यवहार और परमार्थ की सिद्धि करने वाला जो उत्तम कर्म उसको ( दधाते ) हे कृपानिधे

भगवन्! आपकी सत्ता से हि धारण करते हैं। दृढ हमको दृढ़ निश्चय है इति। ६। ४॥

## सूक्तम् ३

अश्विनेत्यस्य सूक्तस्य मधुच्छन्दा ऋषिः। तत्राद्यानां त्रयाणां मन्त्राणामश्विनौ देवता चतुर्थपञ्चमषष्ठानामिन्द्रः सप्तमाष्टमनवमानां विश्वेदेवाः। दशमैकादशद्वादशानां सरस्वतीचेति सर्वेषां गायत्री छन्दः षड्जः स्वरः॥

अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती
पुरुभुजा च नस्यतम् ॥ १ ॥

प०—अश्विना। यज्वरीः। इषः। द्रवत्पाणी इति द्रवत्पाणी। शुभःऽपती इति। पुरुभुजा। चनस्यतम् ॥ १॥

## ॥ भाष्यम् ॥

हे (अश्विना) अश्विनौ। अत्र निरुक्त प्रमाणम्॥ अथातोद्युस्थाना देवतास्तासामश्विनौ प्रथमागामिनौ भवतोश्विनौ यद्व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषाऽन्योश्वैरश्विनावित्यौर्णवाभस्तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्य्याचन्द्रमसावित्येके राजानौ पुण्यकृतावित्यैतिहासिकास्तयोः काल ऊर्ध्वमर्धरात्रात् प्रकाशीभावस्यानुविष्टंभमनुत्तमोभागो हि मध्यमो ज्योतिर्भाग आदित्यस्तयोरेषा भवतीति। अ० ११ खं १। (यज्वरीः) यज्ञसिद्धिसंपादिनीरोषधीः पालयथोवर्धयथश्च (इषः) अन्नानि च (द्रवत्पाणी) द्रवणयुक्तौ पाणीहस्तौ व्यवहारयोग्यौ

ययोस्तौ (शुभस्पती) शुभस्य सुखस्य कल्याणस्य वा पती-पालकौ अधिष्ठातारौ च यौ तौ युवां शुभस्पती (पुरुभुजा) पुरुभुजौ बहुरसभोक्तारौ भोगहेतू स्थः तौ युवां (चनस्यतम्) इष्टकारिणौ भवतम्॥ अत्र निरुक्तोत्तरषट्के सप्तमाध्याये तृतीय चतुर्थ खण्डे॥ द्विविधासृणिर्भवति भर्त्ता च हन्ता च तथाश्विनौ चापि भर्त्तारौ जर्भरीभर्त्तारावित्यर्थतुर्फतूहन्तारौ॥

अथास्यार्थः॥ यथाद्विविधासृणिरर्थगतिर्भवति सृण्येव जर्भरी तुर्फरी तू इति मन्त्र प्रामाण्यात्। द्वौ ह्यश्विपदार्थगुणौ भर्त्ता च हन्ताचेति। तथा तेनैव प्रकारेणाश्विनौ द्व्यर्थौ विज्ञेयौ जर्भरी भर्त्तारौ धारकौ पोषकौ च। तुर्फरी तू हन्तारौ भेदकत्वाद्धननकर्त्तारौ च। एतदर्थयुक्तत्वात् पूर्वोक्तावश्वगृह्येते। तयोरुक्तार्थयुक्तत्वात्। हे परमेश्वर भवद्रचितावेतौ भवत्प्राप्तौ व्यवहारविद्यायां च द्रवत्पाणी शुभस्पती पुरुभुजौ सुखप्रदौ भवत्कृपया सदा नः स्याताम्। दुःख हन्तारौ चेति। च न हिंसायामिति धात्वर्थ योगात् चनस्यतमिति संगतिः।

## ॥ अथ प्राकृतभाषा ॥

हे (अश्विना) अश्विनौ तुम दोनों (यज्वरीः) ज्ञान और द्यौः प्रकाश और जो पृथिव्यादि प्रकाशित पदार्थ यज्ञ शिल्पादि क्रिया की सिद्धि करने वाली ओषधी और (इषः) अन्नों के रक्षण और वृद्धि करने वाले हो (द्रवत्पाणी) क्योंकि आपके द्रवण नीचे और खाली स्थान में गिरने का जो व्यवहार का हेतु है यही पाणी हस्त हैं। तथा ऊपर द्रवण होना हलकापन से उर्ध्वगमन होना ये भी दो हाथ हैं (शुभस्पती) शुभ जो सुख कल्याण उसके पालने के हेतु हो (पुरुभुजा) बहुत रसों

के भोगोत्पत्ति और भोग होने के हेतु हो ( चनस्यतम् ) इच्छित सुख के करने और दुःखनाश के हेतु हो। इस विषय का संस्कृत में निरुक्त का प्रमाण लिखा है सो देख लेना। हे परमेश्वर! आप ने सृष्टि में जो पूर्वोक्त अश्विन उत्पन्न किये हैं वे आपकी प्राप्ति और शिल्पादि कारीगरी व्यवहारविद्या में आप की कृपा से सदैव हमको सुख देने वाले हों और दुःख के नाश करने वाले ॥ १ ॥

## ॥ अथ द्वितीयो मन्त्रः ॥

अश्विना पुरुदंससा नरा शवीरया धिया
धिष्ण्या वनतं गिरः ॥ २ ॥

प०—अश्विना । पुरुऽदंससा । नरा । शवीरया । धिया ।
धिष्ण्या । वनतम् । गिरः ॥ २ ॥

## ॥ भाष्यम् ॥

अश्वि शब्दार्थमुपदिशति ईश्वरो न इत्यध्याहार्यम् ॥ तदुत्पादितत्वात्सर्वस्य । हे ( अश्विना ) पूर्वोक्तावश्विनौ ( पुरुदंससा ) पुरुदंससौ बहुकर्मयुक्तौ अनेकक्रियाहेतू ( नरा ) नरौ शब्दोच्चारण श्रवणादिक्रियानेतारौ सर्वक्रियासाधनहेतू ( धिष्ण्या ) धृष्टौ प्रगल्भगुणयुक्तौ ( शवीरया ) अर्थग्रहणेवेगवत्या ( धिया ) सदर्थ धारणवत्याऽस्मद्बुद्ध्या सह वर्त्तमानौ ( गिरः ) अस्मद् वाणीः युवां ( वनतम् ) संभजेथाम् सम्यक्सेवनं कुरुतमिति ॥ २ ॥

## ॥ अथ प्राकृतभाषा ॥

अश्विन शब्द से जो अर्थ लिया जाय उसका परमेश्वर उपदेश

कर्त्ता है ऐसा ऊपर से जान लेना क्योंकि सब जगत् परमेश्वर ने ही उत्पन्न किया है (अश्विना) हे द्यावापृथिव्यादी तुम दोनों (पुरुदंससा) अनेक विध क्रिया के होने में कारण हो (नरा) शब्द का उच्चारण और श्रवण आदि क्रिया के प्राप्ति करने वाले (धिष्ण्या) व्यवहारक्रिया के दृढ़ साधनभूत (शवीरया) अर्थज्ञान में अत्यन्त बल युक्त (धिया) सत्यअर्थ के धारण करने वाली जो हमारी बुद्धि उस से सहवर्तमान जो (गिरः) हमारी वाणी उसको (वनतम्) सम्यक् सेवन करो ऐसा उपदेश ईश्वर से प्राप्त हुआ है वेद द्वारा इसका ग्रहण करना सबको उचित है ॥ २ ॥

## ॥ अथ तृतीयो मन्त्रः ॥

दस्रा॑ युवाक॑वः सुता नास॑त्या वृक्तब॑र्हिषः ।
आ या॑तं रुद्रवर्त्तनी ॥ ३ ॥

प०—दस्रा॑ । युवाक॑वः । सुताः । नास॑त्या । वृक्तब॑र्हिषः ।
आ । यातम् । रुद्रवर्त्तनी इति॑ रुद्रवर्त्तनी ॥ ३ ॥

## ॥ भाष्यम् ॥

हे पूर्वोक्त विशेषणयुक्तावश्विनौ युवां (आयातम्) अस्मदुपकारमागच्छतं याभ्यां युवाभ्यां सहायभूताभ्यां व्यवहार परमार्थविद्ये उपलभेमहि । कथं भूतौ युवां (दस्रा) दस्रौ दोषदारिद्र्योपक्षयितारौ (नासत्या) नासत्यौ न विद्यते असत्यं तत्त्वं कारणं वा ययोस्तौ नासत्यौ सत्यब्रह्मकारणान्वितौ (रुद्र-

वर्त्तनी ) रुद्रस्य जीवस्य वर्त्तनिर्मार्गं इव मार्गौ ययोस्तौ रुद्रवर्त्तनी अर्थात् सूक्ष्मपन्थानौ पोषणबलप्रदाभ्यां युवाभ्यां ( सुताः ) सुताः उत्पादिताः सर्वे सोमाः सोमगुणाः रसाः सन्ति कथंभूतास्ते (युवाकवः) सर्वौषध्युत्तमगुणमिश्राः पुनः कीदृशाः (वृक्तबर्हिषः) वृक्तंभिन्नं कृतं बर्हिरन्तरिक्षं यैस्ते वृक्तबर्हिषः । अथवा वृक्तं दूरीकृतं बर्हिः पदं प्राप्तं दुःखं यैस्ते । अम्बरमित्यादिषु षोडशान्तरिक्षनामसु बर्हिरिति पठितं निघण्टौ तथा अग्निरित्यादि त्रयोदश पदेषु बर्हिरित्युक्तं निघण्टौ यदान्तरिक्षं रसा गच्छन्ति तदातदधिकरणमन्तरिक्षं भित्त्वैव तिष्ठन्ति । रसादियुक्तानां द्रव्याणामवकाशभाजित्वात् ॥ ३ ॥

## ॥ अथ प्राकृतभाषा ॥

हे अश्विनौ द्यावापृथिवी आदि तुम दोनों ( आयातम् ) हमारे शरीर के आरोग्य और शिल्पविद्यादि उपकार करने को प्राप्त हो तुम दोनों के सहाय से परमार्थविद्या परमेश्वर और धर्म को हम जाने तथा व्यवहारविद्या यज्ञ और शिल्पादि सिद्धि करने की क्रिया और ज्ञान को प्राप्त हों तुम दोनों कैसे हो ( दस्रा ) अविद्यादिदोष और दारिद्र्य के नाश करने वाले हो तथा ( नासत्या ) तुम्हारा स्वरूप और कारण जो ब्रह्म सो सत्य ही है तुम सत्य जो ब्रह्म तुम्हारा कारण उससे तुम युक्त हो (रुद्रवर्तनी) रुद्र जो जीव उसका जैसा सूक्ष्ममार्ग सूक्ष्मगति है वैसे तुम भी दोनों सूक्ष्म गमन करने वाले हो । एवं रोने का हेतु जो मृत्यु उसका भी तुम दोनों मार्ग हो अर्थात् विपरीत होने से दुःख देने वाले भी हो सब रस और प्राणियों का पालन करने वाला जो प्राण बाहर का वायु और बल पुष्टि पराक्रम दृढ अङ्ग आदि का देने वाला जो उदान जो भीतर का वायु इन दोनों का

आधार और शोधक दोनों तुम्हीं हो (सुताः) जो सुखकारक सब रस वे उत्पन्न किये जाते हैं वे रस कैसे हैं (युवाकवः) सब ओषधियों के उत्तम गुणों से युक्त हैं फिर कैसे हैं (वृक्त-बर्हिषः) जब वे रस अन्तरिक्ष में प्राप्त होते हैं तब (बर्हि) अन्तरिक्ष को (वृक्तं) भेद करके ठहरते हैं अर्थात् जिस अवकाश में एक परमाणु जिस समय रहता है उस अवकाश में उसी समय में दूसरा परमाणु नहीं ठहर सकता अथवा बर्हि नाम है प्राप्त दुःख का उसको वृक्त नाम दूर करने वाले वे रस हैं रसादि युक्त सब द्रव्यों का स्वभाव ही है कि अपने २ अवकाश में दूसरे को अवकाश नहीं देना ॥ ३ ॥

## ॥ अथ चतुर्थो मन्त्रः ॥

इन्द्रा याहि चित्रभानो सुता इमे त्वायवः ।
अण्वीभिस्तना पूतासः ॥ ४ ॥

प०—इन्द्र । आ । याहि । चित्रभानो इति चित्रऽभानो । सुताः । इमे । त्वाऽयवः । अण्वीभिः । तना । पूतासः ॥ ४ ॥

## ॥ भाष्यम् ॥

हे (इन्द्र) परमैश्वर्ययुक्त परमात्मन् (चित्रभानो) चित्रा अद्भुता भानवो दीप्तयः जगद्रचनादि प्रकाशिकाः शक्तयः सामर्थ्यानि यस्य तत् संबुद्धौ हे चित्रभानो विचित्र प्रकाशान्वित भगवन् (सुता इमे) इमे भवद्दत्ता अस्मत् प्राप्ता जगति पदार्थास्ते (अण्वीभिः) स्व सामर्थ्यान्विताभिरत्यन्तसूक्ष्माभि-

मात्राभिः सुताः भवदुत्पादिताः ये पदार्थाः सन्ति । अथवा । अण्वीभिरङ्गुलिभिरस्माभिर्येनिर्मिताश्च ( तनाः ) विस्तृता आकाशादयः ( पूतासः ) पूताः पवित्राः पवित्रकारकाः सूर्य्यवाय्वादयो ये पदार्था वर्त्तन्ते ते सर्वे ( त्वायवः ) त्वां प्राप्तास्त्वदर्पिताः सन्तु । एवं प्रार्थितस्त्वं स्व कृपयाऽस्मभ्यं सुखदानार्थं सर्वथाऽस्मत् सहायार्थं च (आयाहि) आगच्छ भवत् पालिता वयं सर्वाणि सुखान्युपलभेमहि ।। इति परमोर्थः ॥

## ।। अथापरोर्थः ।।

हे ( इन्द्र ) सूर्य्य वायो अथवा जीव ( चित्रभानो ) विचित्र प्रकाशकसूर्य्य विचित्रबलवायो आश्चर्यज्ञानजीव त्वं विद्यासहायार्थं विद्याकरणार्थं च । अस्मत् साधन पथं (आयाहि ) आगच्छ प्राप्तोभव ( अण्वीभिः ) सूक्ष्माभिः किरणैः सूक्ष्माभिर्गतिभिश्च ( तनाः ) विस्तृताः विशाला वर्षादयः ( पूतासः ) शुद्धि हेतवो ये पदार्था इह संसारे (सुताः) उत्पन्नाः सन्ति त इमे सर्वे (त्वायवः) त्वां प्राप्तास्त्वन्निमित्तसिद्धाः सन्तु । तथा । हे जीव ये अण्वीभिः स्व हस्तैस्त्वयोत्पादिता यथोक्ताः सर्वे व्यवहाराः सन्ति त इमे त्वां प्राप्ताः सन्तु । (अनेन) किमागतं सूर्य्यवाय्वादिभ्यो यावानुपकारो ग्रहीतुं शक्यस्तावान्सर्वैर्ग्राह्यः । तथा । जीवेन यादृशं कर्म क्रियते तावत्तमेव प्राप्नोति । अतः पवित्राः शुद्धाः सर्वधर्मयुक्ता व्यवहाराः कार्या इत्यभिप्रायः ।। इदि परमैश्वर्ये । अस्मादौणादिको रन् प्रत्ययः ॥ अत्रेन्द्रशब्देनपरमेश्वरस्यग्रहणम् । द्वितीयेर्थे परमेश्वरस्य सूर्य्यादीनां च ग्रहणम् । इमं शब्दं यास्कोनिरुक्तकार अनेकार्थं समाचष्टे ॥ उत्तरषट्कस्य चतुर्थाऽध्यायेऽष्टमखण्डे ॥

इन्द्र इरां दृणातीति वेरां ददातीति वेरां दधातीति वेरां दारयतीति वेरां धारयतीति वेन्दवे द्रवतीति वेन्दौरमत इति वेंद्रे

भूतानीति वा तद्यदेनं प्राणैः समैन्धँस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायत इदं करणादित्याग्रायण इदं दर्शनादित्यौपमयव इन्दतेर्वैश्वर्यकर्मण इन्द्रञ्छत्रूणां दारयिता वा द्रावयिता वा दारयिता च यज्वनामिति ॥ उ० अ० ४ । खं० ८ ॥

## अस्यायमर्थः—

इरां मेघं दृणातीति सूर्य्योवायुर्वेन्द्रः । तथा । इरामन्नमन्नोत्पत्यर्थं जलं वा ददाति दधातीति वा परमेश्वरः सूर्य्यादयोवेतीन्द्राः । एवं धारयतीत्यादिषु द्रष्टव्यम् । इन्दवे धर्माचरणेश्वर भक्त्याऽऽर्द्रायजीवायद्रवतीतीन्द्र ईश्वरः । तस्मिन् रमत इति वा तथा सूर्यादीनां व्यवहारविद्यायां वृष्टिकरणे द्रावकत्वंद्रष्टव्यम् । एवमेव कामक्रोधादीनां ज्वरादि रोगाणामन्यायकारिणाम् प्राणिनां च दारयिताविदारणकर्त्तेन्द्र ईश्वरः । तथा मेघादीनां शत्रूणां सर्वरसानां च दारयितेन्द्रः सूर्योवायुर्वा । एवमेवान्नं ददाति । इन्दवेस्वकृतकर्मसंस्कार क्लिन्नस्य कर्मणो भोगाय सुखाय वा द्रवतीतीन्द्रो जीवः एवमन्यत्रापि यथायोग्येनार्थे सहान्वयः सूर्यादीनां कर्त्तव्य इति ।